# श्रीमन्महाभारतम्

चतुर्धरवंशावतंसश्रीमन्नीलकण्ठविरचितभारतभावदीपाख्यटीकया समेतम् ।

# महापुराणम्

१. ब्रह्ममहापुराणम्
२. पद्ममहापुराणम्
३. विष्णुमहापुराणम्
४. शिवमहापुराणम्
५. भागवतमहापुराणम्
६. नारदीयमहापुराणम्
७. मार्कण्डेयमहापुराणम्
८. अग्निमहापुराणम्
९. भविष्यमहापुराणम्
१०. ब्रह्मवैवर्तमहापुराणम्
११. लिंगमहापुराणम्
१२. वाराहमहापुराणम्
१३. स्कन्दमहापुराणम्
१४. वामनमहापुराणम्
१५. कूर्ममहापुराणम्
१६. मत्स्यमहापुराणम्
१७. गरुडमहापुराणम्
१८. ब्रह्माण्डमहापुराणम्
१९. वायुमहापुराणम्
२०. विष्णुधर्मोत्तर महापुराणम्

वासुकी पुराण :: देवीभागवत

हरिवंश पुराण :: भृंगीशपुराण

एकाम्रपुराण

# श्रीमन्महाभारतम्

# THE MAHĀBHĀRATAM

चतुर्धरवंशावतंसश्रीमन्नीलकण्ठविरचितभारतभावदीपाख्यटीकया समेतम् ।

राष्ट्रिय संस्कृत संस्थान निदेशक, लालबहादुर शास्त्री केन्द्रीय संस्कृत विद्यापीठ प्राचार्य,

**डॉ० मण्डन मिश्र**

प्रणीतया भूमिकया सनाथितम् ।

**प्रथम खण्ड १. आदि पर्व २. सभा पर्व**




**NAG PUBLISHERS**

11A/ U.A. Jawahar Nagar, Delhi-110007

This publication has been brought out with the financial assistance from the Govt. of India, Ministry of Hunan Resource Development.

[If any defect is found in this book please return per V. P. P: for postage to the publisher for free exchange].



(i) 11A/U. A. (Post Office Building), Jawahar Nagar, Delhi-110007

(ii) 8A/ U.A. 3, Jawahar Nagar, Delhi-110007

(iii) Jalalpur Mafi (Chunar-Mirzapur) U. P.

ISBN 81-7081-183-X

I S B N : 81-7081-182-1 (7 Vols Set)

REPRINT

1988

Price Rs. 433-00

PRINTED IN INDIA

Published by Nag Sharan Singh for Nag Publishers 11A/U. A., Jawahar Nagar, Delhi-110007 and printed at New Gian Offset Printers 495, D. D. A. Complex, Shahzada Bagh Extn , Daya Basti, Delhi.

# पुरोवाक्

**अतुलनीयं खलु महाभारतम्**—

आख्यानोपाख्यानसमृद्धिमत्त्वात् सर्वविधविषयचर्चासमन्वितत्वाद् विषयप्रस्तुतिवैविध्यविलसितत्वाच्च सुरभारतीभाण्डागारविभूषणं महाभारतं संस्कृतवाङ्मयमेव नैवापितु समस्तस्य जगतो ग्रन्थराशिमतिशेतेऽत्र विषये विपश्चिदपश्चिमानां नैवास्ति काचिदपि विप्रतिपत्तिः। सुरभारतीभाण्डागारविभूषणत्वेन विख्यातस्य महाभारताख्यग्रन्थरत्नस्याख्यानोपाख्यानसम्पदा प्राचीनैः काव्यशास्त्राचार्यवर्यैरपि सम्मानिताऽस्ति; तैरुपजीव्यकाव्यगणनाप्रसङ्गे महाभारतस्य नाम विशेषरूपेण चर्चितम्। एवमेव भारतीयकाव्यकदम्बके सर्वाधिकमवदानं महाभारतस्य वरीवर्तीति विवेचयद्भिराधुनिकैस्साहित्यसमीक्षकैरस्य ग्रन्थस्याख्यानोपाख्यानसम्पत्तेः प्रभावातिशयो बहुधा विगीयते। वस्तुत आख्यानोपाख्यानसहस्रमण्डितस्य महाभारतस्य साम्यं विश्वस्मिन्नपि वाङ्मये नैव विलोक्यते। महाभारताख्येऽस्मिन् ग्रन्थे ह्याख्यानोपाख्यानवैपुल्येन सह विषयवैपुल्यमपि विराजते। आख्यानोपाख्यानसहस्रसमन्वितेऽत्र महाभारते खलु लोकविख्यातानां ग्रन्थान्तरप्रस्तुतानाञ्च विश्वेषामपि विषयाणाञ्चर्चा विलसतीति हेतोर्जगति प्रसिद्धमस्ति—"यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्।"

संसारे महाभारतमिति विख्यातेऽत्र सुरभारतीभाण्डागारविभूषणे विपुलविषयप्रकाशनसामर्थ्येन सह विषयप्रस्तुतिवैविध्यविलासोऽपि विलोक्यतेऽत एव लोके केचिद् विद्वांसो महाभारताख्यमेनं ग्रन्थमितिहासरूपेण स्वीकुर्वन्ति तथा चान्ये सुधियोऽस्य काव्यत्वं शास्त्रत्वञ्च ख्यापयन्ति। वस्तुतो ग्रन्थेऽत्र ग्रन्थकारप्रत्यक्षीकृतानां पाण्डवादिसम्बद्धानां घटनानां याथातथ्येन वर्णनमस्तीति हेतोरस्य ग्रन्थस्येतिहासत्वं सिद्ध्यति तथा च "जयनामेतिहासोऽयम्" इत्यादिभिर्ग्रन्थप्रस्तुतैर्वाक्यैरप्येतस्य ग्रन्थस्येतिहासत्वं सम्पोष्यते। काव्यशास्त्रविशारदास्तु महाभारते प्रस्तुतस्य पाण्डवादिजीवनचरित्रास्य चित्ताकर्षकत्वं रसात्मकताञ्चानुसृत्यामुं ग्रन्थं काव्योत्तममिति कथयन्ति तथा चान्ये सुधियोऽस्मिन् ग्रन्थे बहुत्र कपिलगौतमकणादादितत्त्वविशारदविरचितग्रन्थसाम्यं विभातीति हेतोरस्य ग्रन्थस्य शास्त्रोत्तमत्वं साधयन्ति। एवञ्च काव्यत्वशास्त्रत्वयोः

सम्मेलनमत्रास्तीति विचार्य ध्वन्यालोककारेणानन्दवर्धनेनास्य ग्रन्थस्य शास्त्रकाव्यमित्यभिधानं विहितम्। इत्थं हीतिहासत्वकाव्यत्वशास्त्रत्वादीनां विविधधर्माणां सङ्गमनवशादयं ग्रन्थो वस्तुतो विश्ववाङ्मयमतिशेते। लोके यद्यपि स्कन्दपुराणादीनामप्याख्यानसम्पदा विषयवैपुल्यञ्च जनैर्बहुधा प्रशंस्यते तथात्वे सत्यपि महाभारतवत्तत्र प्रभावातिशयस्य चित्ताकर्षकतायाश्च दर्शनाभावान्महाभारतसाम्यं नैवास्तीति निश्चप्रचम्। एवमेव महाभारतमिवोपजीव्यकाव्यत्वेनार्षकृतित्वेन च विख्याते वाल्मीकीयरामायणेऽपि महाभारतसमानाऽऽख्यानोपाख्यानसमृद्धिर्नास्ति न च तत्रैतादृशं विषय-वैपुल्यं विषयप्रस्तुतिवैविध्यञ्च विलसतीति हेतोर्महाभारतं महाभारतोपममस्तीति प्रसिद्ध्यति।

**ग्रन्थस्याकारस्तन्निर्माणकालश्च—**

सम्प्रत्यष्टादशपर्वात्मको महाभारताख्यो ग्रन्थः समुपलभ्यतेऽस्यैषु विभिन्नेषु संस्करणेषु श्लोकानां संख्याभिन्ना विलोक्यते। प्रायशः श्लोकानां सहस्राशीतिर्महाभारतीयसंस्करणेषु प्राप्यते। अस्य विशालकायस्य ग्रन्थस्यैतत्स्वरूपं कस्मिन् काले सम्पन्नमिति विषये विपश्चितां मतवैभिन्न्यं विभाति। प्राचीनभारतीयविद्वत्परम्परामतानुसारं महाभारतस्य लक्षश्लोकात्मकता प्रसिद्धा तथा चास्य लक्षश्लोकात्मकस्य महाभारतस्य विरचनं कृष्णद्वैपायनवेदव्यासेन पञ्चसहस्रवर्षपूर्वं विहितमिति प्रसिद्धिर्वर्तते। तथा च प्राचीना भारतीयविद्वत्परम्परा लक्षश्लोकशरीरस्य महाभारतस्यापरमभिधानं जय आसीदिति स्वीकरोति। महाभारतस्य समुपलभ्यमानेषु संस्करणेषु स्वर्गारोहणपर्वपर्यन्तानामष्टादशानां पर्वणां श्लोकसंख्या लक्षान्न्यूना वर्ततेऽतो ह्यस्य ग्रन्थस्य लक्षश्लोकात्मकता कथं सिद्ध्यतीति प्रश्नस्य समाधानार्थं प्राचीनैर्भारतीयविपश्चिदपश्चिमैः प्रतिपाद्यते यद्धि महाभारतस्य खिलरूपेण विख्यातस्य हरिवंशपुराणस्यापि श्लोकसंख्या महाभारतीये श्लोकसहस्रशतके गणनीयाऽस्ति। हरिवंशपुराणस्य महाभारतीयाङ्गत्वेन ख्यातिश्चिरात्प्रवर्तते यथा हि तत्र ध्वन्यालोकस्य चतुर्थोद्योते महाभारतस्याङ्गिरसविचारावसरे काव्यशास्त्राचार्यवर्येणानन्दवर्धनेनापि हरिवंशे महाभारतसमाप्तिर्निर्दिष्टाऽस्ति। इत्थं खलु महाभारतस्य कृष्णद्वैपायनवेदव्यासविरचितत्वं लक्षश्लोकपरिमितत्वमष्टादशपर्वधरत्वं हरिवंशवर्णनसमाप्तिपर्यन्तत्वं जयापरपर्यायत्वञ्च भारतीयप्राचीनग्रन्थेषु बहुत्र बहुधा चर्चितमस्ति तथापि वैदेशिकैस्तथा च कैश्चनाधुनिकैर्भारतीयैर्विषयेऽस्मिन् विमतिः प्रदर्शिता प्रदर्श्यते च।

वैदेशिकानां तथा च केषाञ्चनाधुनिकानां भारतीयानां महाभारतस्वरूपविषये मतमस्ति यत्कृष्णद्वैपायनेन विरचितस्य ग्रन्थस्य नाम जय आसीन्नतु महाभारतमिति। सोऽयं जयाख्यो ग्रन्थोऽतिस्वल्पाकार आसीदिति सम्भाव्यते तथा च तत्र जयाख्ये ग्रन्थे पाण्डवविजयवर्णनपर्यन्ता

महाभारतीया कथाऽवर्ततेति प्रकल्प्यते। परवर्तिनि युगे भरतवंशीयानामन्येषां नृपतीनाञ्चरित्रस्य जयकाव्येन सह संयोगे कृते सति जयस्य परिवर्धितं स्वरूपं भारतमिति विख्यातमभूत्। ततश्च परवर्तिभिर्नैकैः सुकविभिराख्यानान्तराणां भारते समायोजनं कृतं येन ह्ययं ग्रन्थो महाभारतमिति नाम्ना प्रसिद्धमभूत्। इत्थं वैदेशिकानां मतानुसारं महाभारतं विभिन्नसहस्राब्दीवर्तिनां नैकेषां कवीनां कृतिसमायोजनान्निर्मितमिति विज्ञायते। कैश्चिदाधुनिकैर्विद्वद्भिः प्रकाशितं यत्खलु जयाख्ये काव्ये श्रीमद्भगवद्गीतोपनिषदपि नावर्तत तस्या अपि संयोजनं कालान्तरे जातम्। एवमेव महाभारतस्य कथांशविशेषाणां रचनाविषये वैदेशिकैर्विद्वद्भिर्विभिन्नानि मतानि प्रस्तुतानि। मतानन्त्यस्य हेतुरस्ति कृष्णद्वैपायनशैलीपरिचयाभावः।

महाभारतस्य नैककविकृतित्वं साधयद्भिः पण्डितम्मन्यैराधुनिकैर्विवेचकैः कथ्यते यन्महाभारतस्य समुपलब्धेषु संस्करणेषु प्रकाशितं यद् ग्रन्थस्यास्य वैशम्पायनेन सौतिना च द्विधा प्रवचनं विहितमेतेन प्रवक्तृभेदेन महाभारतस्य विभिन्नकालवर्तिकविकृतित्वं विज्ञायते। इदं कथनं युक्तियुक्तं नैव प्रतिभाति। महाभारतस्य सर्वेष्वेव संस्करणेषु वर्णितं यत्खलु जनमेजयेन विहितस्य नागयज्ञस्य समाप्तौ जनमेजयजिज्ञासानिवृत्तये कृष्णद्वैपायनवेदव्यासस्य प्रेरणया तच्छिष्यो वैशम्पायनो गुरुसमुपदिष्टं महाभारतवृत्तं प्रास्तौत् ततश्च नागयज्ञे वैशम्पायनप्रोक्तं तदिदं महाभारतीयं वृत्तं मया श्रुतमिति सूचितवता सौतिना सर्वं तदेव वृत्तं शौनकादीन् प्रति नैमिषारण्ये कथितमेतेन निर्देशेन समस्तस्य महाभारतीयवृत्तवर्णनस्य द्वैपायनकृतित्वं नैव खण्डितं भवति। सोऽयं वैशम्पायनो ग्रन्थकारस्य कृष्णद्वैपायनस्य शिष्य आसीत्तथा च सौतिः कृष्णद्वैपायनशिष्यस्य लोमहर्षणस्य पुत्रोऽवर्ततेति सर्वत्र पुराणेषु प्रसिद्धम्। गुरुविरचितग्रन्थस्य प्रवचनं सभायां येन शिष्येन कृतं स शिष्यो गुरुकल्पनामेव तत्र प्रास्तौदित्येव तत्कथनानुसारं विज्ञायते। न च प्रवक्तृभेदेन ग्रन्थभेदोऽथवा भूयान् विस्तारोऽभूदिति। एतौ महाभारतप्रवक्तारौ वैशम्पायनः सौतिश्च ग्रन्थकारस्य शिष्यः शिष्यपुत्रश्चास्तामिति निर्देशेन महाभारतस्य रचना विभिन्नासु सहस्राब्दीषु शताब्दीषु वा सम्पन्नेति कथनस्याप्यनौचित्यं सिद्ध्यति।

केचिद् विद्वांसो महाभारतस्य विशालाकारवत्त्वमधिकृत्यास्य ग्रन्थस्यानेककविकृतित्वं मन्वते। ते हि लक्षश्लोकात्मकस्य ग्रन्थस्य विरचनमेकजनसाध्यं नैवाङ्गीकुर्वन्ति। महामुनेः कृष्णद्वैपायनस्य प्रतिभाप्रकर्षस्य परिचयाभाव एवैतादृशाः विचाराः समुत्पद्यन्ते। वस्तुतस्तु ब्रह्मसूत्ररचयितुरष्टादशपुराणकर्तुर्वेदव्यासस्य बुद्धिवैभवमतुलनीयमवर्ततेत्यत्र नास्ति संशीतिलेशोऽतो हि प्रबलप्रमाणाभावे वैदेशिकप्रस्तुतो महाभारतरचनाविषयको विचारः प्रकल्पनमात्रमेवास्तीति प्रतीयते।

**महाभारतपर्वसंख्यारहस्यम्—**

कृष्णद्वैपायनकृतिरूपेण विख्यातेषु ग्रन्थेष्वष्टादशसंख्या बहुत्र विलोक्यते । यथाहि वेदव्यासविरचितानां ब्राह्मादीनां महापुराणानां संख्याऽष्टादश प्रसिद्धा । "अष्टादशपुराणानां कर्ता सत्यवतीसुतः" इत्यादिभिर्निर्देशैः कृष्णद्वैपायनाख्येन सत्यवतीसुतेनाष्टादशैव पुराणानि विलिखितानीति प्रतिपद्यते । एवमेव कृष्णद्वैपायनकृतिप्रमुखस्य महाभारतस्य पर्वणामपि संख्याऽष्टादश वर्तते । एवञ्च महापुराणेषु प्रमुखतमस्य श्रीमद्भागवतस्य श्लोकानां संख्याऽष्टादशसहस्रात्मिका विख्याता तथैव महाभारतस्य प्रमुखांशस्य श्रीमद्भगवद्गीताया अध्यायानां संख्याऽष्टादश विद्यते । इत्थं बहुत्राष्टादशसंख्यापरिग्रहो वेदव्यासेन विहितस्तत्र केनापि रहस्येन भाव्यमिति विवेचयद्भिः ओझोपाह्वश्रीमधुसूदनैस्तथा चतुर्वेदोपाह्वश्रीगिरिधरशर्मप्रभृतिभिर्वैदिकविज्ञानानुशीलनपरैर्भारतीयमनीषिभिः प्रकाशितं यत्कृष्णद्वैपायनेन परिगृहीता सेयमष्टादश संख्या सृष्टिविद्यासम्बद्धा वर्तते । शतपथब्राह्मणे (८।४।१।१३) सृष्टिसंज्ञकेष्टिकानाञ्चर्चाप्रसङ्गे विवेचितं यत् "तस्य द्वादश मासाः, पञ्चर्तवः, संवत्सर एव प्रतूर्तिः ।" एतेन शतपथब्राह्मणवचनेन विज्ञायते यत्खलु वैदिकविज्ञानानुसारम् अष्टादशसंख्या संवत्सरचक्रस्य कालचक्रस्य सृष्टिप्रक्रियायाश्च बोधं कारयति । तत्र सांख्यदर्शनेऽप्यष्टादशसंख्यायाः सृष्टिविद्यायाश्च परस्परं सम्बन्धविशेषः प्रतिभाति । सांख्यदर्शनसम्मता या तत्त्वपञ्चविंशतिर्विज्ञायते तत्र प्रकृतिपुरुषयोर्नित्यत्वनिर्देशात्सृज्यमानानां तत्त्वानां संख्या त्रयोविंशतिरिति प्रतिपद्यते । तत्र सृज्यमानेषु तत्त्वेषु तन्मात्रापञ्चकं महाभूतपञ्चकस्यैव सूक्ष्मरूपमस्तीति विचारानुसारं तत्त्वसंख्याऽष्टादशैव मुख्यचिन्तनीयतां भजते । इत्थमष्टादशसंख्या सविशेषं सृष्टिविद्यया सह सम्बद्धाऽस्तीति परिचीयतेअनेन विवेचनेनेदमपि सिद्ध्यति यत्खलु महामुनिः कृष्णद्वैपायनो यत्र यत्र ग्रन्थविशेषे प्रसङ्गविशेषे चाष्टादशसंख्यां परिगृहीतवान् तत्र सृष्टिविद्याप्रकाशनपरत्वं वर्तते । वस्तुत इयमष्टादशसंख्या ग्रन्थविशेषस्य प्रसङ्गविशेषस्य च सृष्टिविद्याप्रकाशनपरत्वं निगूढं निर्दिशति । अत्र विशाले महाभारतेऽपि सृष्टिविद्या सप्रपञ्चं यथाप्रसङ्गं विवेचिताऽत एव कृष्णद्वैपायनो निगूढं निर्देष्टुमस्य ग्रन्थस्य विभाजनमष्टादशभिः पर्वभिः कृतवानिति प्रतिभाति । ग्रन्थस्याध्यायानां पर्वणां श्लोकादीनां वा संख्या ग्रन्थकारस्य चिन्तनविशेषं द्योतयतीति प्राचीनग्रन्थकारैरपि निर्दिष्टमस्ति । भरतमुनिविरचितस्य नाट्यशास्त्रस्य व्याख्यानं विरचयता श्रीमदभिनवगुप्ताचार्येणाभिनवभारत्याः प्रारम्भे नाट्यशास्त्रीयाध्यायसंख्यारहस्यं प्राकाशि यत्खलु नाट्यशास्त्रस्य षट्त्रिंशदध्यायाः प्रत्यभिज्ञादर्शनसम्मतानां षड्त्रिंशत्संख्याकानां तत्त्वानां प्रतीकभूताः सन्ति । महाभारतीयपर्वणामष्टादशत्वं रहस्यविशेषं निगूढं निर्दिशतीति भारतीयविद्वत्परम्पराऽभिमतस्य पुष्टिरष्टादशसंख्याविभूषितानां महापुराणानां सृष्टिविद्याप्रकाशनपरत्वमधिकृत्य सविशेषं विजायते । अत्राष्टदशपर्व-

विभूषिते महाभारतेऽपि सृष्टिविद्या सुविशदं प्रकाशिताऽस्तीति महाभारतस्य परिशीसनेन सम्यक् प्रतिपद्यतेऽत एव महाभारतीयपर्वसंख्या सृष्टिविद्याप्रकाशनपरतां निगूढं निर्दिशतीति विचारस्यौचिसं परिचीयते।

**महाभारतस्य जयसंज्ञायाः रहस्यम्**

कृष्णद्वैपायनमहामुनिना महाभारताख्यस्य स्वग्रन्थस्य सृष्टिविद्याप्रकाशनपरत्वं निर्देष्टुमस्य ग्रन्थस्य विभाजनमष्टादशभिः पर्वभिर्विहितं यतो ह्येषा संख्या सृष्टिविद्यासम्बद्धाऽस्तीति विचारमनुसृत्य सुधीभिर्महाभारतस्य "जय" इत्यभिधानमपि सृष्टिविद्यानिर्देशकं वरीवर्तीति साध्यते। महाभारतस्य पर्य्यायभूतोऽयं जयशब्दः प्रकारान्तरेणाष्टादशसंख्यामभिदधाति। जयशब्दे विद्यमानो जकारः स्पर्शसंज्ञकवर्णेष्वष्टमस्थानभागस्ति तथा च यकारो ह्यन्तःस्थवर्णेषु प्रथमोऽस्तीति दृशा जयशब्दे प्रयुक्ताभ्यां जकारयकाराभ्यां क्रमशोऽष्टसंख्याया एकसंख्यायाश्च बोधो भवति तथा चाङ्कानां वामतो गतिरितिसिद्धान्तानुसारमाभ्यां वर्णाभ्यामष्टादशसंख्यायाः प्रतीतिर्जायते। ज्योतिषशास्त्रे वर्णविशेषाणां संख्याविशेषबोधकत्वं सुप्रथितमस्ति परन्तु तत्र संख्यानिर्देशार्थं वर्णविशेषाः विभक्ततया व्यवह्रियन्ते न तु शब्दविशेषाकारधरत्वेन यथा ह्यत्र जकारयकारौ जयशब्दाकारेण प्रयुक्तौ स्तः। कृष्णद्वैपायनविरचितस्य महाभारतस्य कूटश्लोकप्राधान्यं परिचिन्वानाः सुधिय एव जयशब्दवर्तिनोर्जकारयकारयोर्विभागं विभाव्यास्य शब्दस्याष्टादशसंख्याबोधकतां प्रत्येतुं प्रभवन्ति।

**कूटकाव्यधारास्रोतो वै महाभारतम्—**

संस्कृतवाङ्मये कूटरचनानां वैपुल्यं विराजते। वैदिकसाहित्येऽपि निगूढानां सृष्टिचक्रसम्बद्धानां विषयाणां प्रकाशनं येषु मन्त्रेषु विद्यते तेषां कूटत्वं विद्वद्भिरुररीक्रियतेऽत एव कूटरचनाविषयकचर्चाऽवसरे वैदिकवाङ्मयस्यापि निर्देशो विद्वद्भिर्विधीयते तथापि चमत्कारवतीनां कूटरचनान्तु प्रथमदर्शनं महाभारत एव भवतीति साहित्यसमीक्षकमण्डलस्वीकृतं तथ्यमस्ति। यथा हि महाभारतमाख्यानसमृद्धिमत्त्वात् परवर्तिना भारतीयसुकविवृन्देन विरच्यमानानां कृतीनामुपजीव्यत्वेन विख्यातं तथैवेदं कूटकाव्यधारास्रोतोरूपेणापि प्रसिद्धमस्ति। तत्र सुरभारतीभाण्डागारविभूषणस्य महाभारतस्य यमकश्लेषाश्रितकूटानि सविशेषं महत्त्वं भजन्ते। अस्य ग्रन्थस्य प्रथमपर्वणि पाण्डवानां लाक्षागृहप्रवासादिकं वर्णयता कृष्णद्वैपायनेन तस्य विशिष्टभवनस्य लाक्षानिर्मितत्वं विदुरो युधिष्ठिरमकथयदिति प्रकाशितमस्ति। तत्र लाक्षागृहवर्णनप्रसङ्गे युधिष्ठिरं प्रति विदुरस्य समुपदेशं प्रस्तोतुं कृष्णद्वैपायन एतत्कूटपद्यं प्रास्तौत्—

**प्राज्ञः प्राज्ञप्रलापज्ञः प्रलापज्ञमिदं वचः।**
**प्राज्ञं प्राज्ञः प्रलापज्ञं प्रलापज्ञो वचोऽब्रवीत्॥**

म० भा० १।१४५।२०

अत्र पद्ये प्राज्ञप्रलापज्ञशब्दयोर्बहुधाऽऽवृत्तिरतो हि यमकालङ्कारस्य

विच्छित्तिर्विभाति। अस्य यमकश्लेषानुप्राणितस्य कूटश्लोकस्य व्याख्यानावसरे टीकाकारैः प्राज्ञशब्दस्य बुद्धिमान्, ग्राम्यजनः, सुदुर्विज्ञश्चेति त्रयोऽर्थाः निर्दिष्टास्तथा च प्रलापज्ञशब्दस्य ग्राम्यजनभाषाव्यवहारविज्ञः संस्कृतेतरजनवत्प्रलपनमात्रविज्ञश्चेत्यर्थद्वयं निर्दिष्टम्। पूर्वार्धस्थिते प्राज्ञः प्रलापज्ञश्चेति पदे तु विदुरस्य वैशिष्ट्यबोधके स्तस्तथा च प्रलापज्ञमिति पदं युधिष्ठिरस्य विशेषणमस्ति। उत्तरार्धस्थिते प्राज्ञं प्रलापज्ञञ्चेति पदे वचोविशेषणत्वेन प्रयुक्ते स्तः। एवञ्च तत्रैव स्थितं प्राज्ञः प्रलापज्ञश्चेति पदद्वयं षष्ठीविभक्तियुतं विद्यते। इत्थं खलवत्र शब्दश्लेषस्य विभक्तिश्लेषस्य च चमत्कृतिर्विलसति। एवं हि यमकश्लेषविच्छित्तिविमूढैर्जनैर्वक्तुरभिप्रेतार्थो वेत्तुं नैव पार्यते। टीकाविलोकनं विना कथमप्यर्थबोधो नैव भवति।

अनेकार्थकशब्दविन्यासपूर्वकं विरचितानां कूटश्लोकानां विच्छित्तयः प्रतिपर्व महाभारते विलसन्ति। तत्र कर्णपर्वणि कर्णप्रक्षिप्तस्य नागबाणस्य वर्णनं विदधता कृष्णद्वैपायनेनानेकार्थकशब्दावृत्ति-चमत्कारो निम्नलिखिते पद्ये प्रस्तुतोऽस्तिः—

**गोकर्णा सुमुखीकृतेन इषुणा गोपुत्रसम्प्रेषिता।**
**गोशब्दात्मजभूषणं सुविहितं सुव्यक्तगोऽसुप्रभम्॥**
**दृष्ट्वा गोगतकं जहार मुकुटं गोशब्दगोपूरि वै।**
**गोकर्णासनमर्दयच्च न यथा का प्राप्य मृत्योर्वशम्।**

म० भा० ८।९०।४२

अत्र पद्ये सप्तवारं गोशब्दस्य प्रयोगो विभिन्नेष्वर्थेषु विहितोऽस्ति। गोकर्णा (सर्पिणी) पार्थस्यार्जुनस्य मुकुटं जहार, परन्त्वर्जुनस्सुरक्षितोऽतिष्ठतेति- वर्णयितुं वेदव्यासः कर्णस्यार्जुनस्य मुकुटस्य सर्पिण्याश्च विशेषणत्वेन गोशब्दस्य विशिष्टबुद्धिगम्यं विचित्रं प्रयोगं व्यधात्। सर्पस्य चक्षुःश्रवस्त्वं सुप्रथितमेवास्ति, तदेव लोकप्रसिद्धं सर्पाभिधानं वेदव्यासेन गोकर्णशब्देनात्र प्रस्तुतम्। गवि-चक्षुषि कर्णः श्रवण सामर्थ्यं यस्याः सा (गोकर्णा) चक्षुःश्रवाः सर्पिणी। सर्पार्थे गोशब्दस्य प्रयोगोऽत्र द्विवारं विहितस्तत्र चतुर्थे चरणे गोकर्णशब्दस्य समासगर्भितत्वेन निगूढार्थकता सविशेषं प्रकाशते। कर्णस्य सूर्यपुत्रत्वं निर्देष्टुमत्र गोपुत्रशब्दस्य प्रयोगः कृतस्तत्र गोमत्स्थाने गोशब्दस्य प्रयोगादस्य नानार्थकस्य शब्दस्यार्थग्रहणं दुःशक्यतरं सञ्जातम्। यतो हि मतुप्प्रत्ययस्य लोप आर्षो विद्यते लोके तु मतुप्प्रत्ययलोपस्य व्यवहारो नैव विलोक्यतेऽत एव पाठकचित्ते सविशेषं भ्रान्तिर्विजायते। एवमेव सुव्यक्तगोऽसुप्रभमित्यत्र पदे गोशब्दस्य रश्मिरूपो ह्यर्थोऽभिधेयत्वेन विवक्षितः परन्तु गोगतकमित्यत्र तु गोशब्दो लक्षणया हयरश्मिप्रदेशं बोधयति। एवञ्च गोशब्दात्मजभूषणमित्यत्र तथा च गोशब्दगोपूरीति पदे "गोशब्द"

इति वर्णावलिः समानरूपेण विराजते परन्तु प्रथमस्थले गौः पृथिवी तया शब्द्यते याऽसौ ग शब्दाअदितिरित्यर्थों विवक्षां भजतेऽपरत्र स्थले गोभिः रश्मिभिः शब्द्यते योऽसौ रश्मिमान् सूर्य इत्यर्थो विवक्षितोऽस्ति। वस्तुत एतादृशं नानार्थकशब्दप्रयोगवैचित्र्यमन्यत्र वेदव्यासपरवर्तिनि संस्कृतसाहित्ये दुर्लभमेव महाकविश्रीहर्षविरचिते नैषधीयचरिते नलपञ्चकवर्णनप्रसङ्गे महाभारतीयस्यास्य नानार्थकशब्दप्रयोगस्य प्रतिफलनमस्तीति प्रकल्पयितुं शक्यते। एवमेव नानार्थकशशब्दप्रयोगवैचित्र्यवतो महाभारतस्य प्रभावो हिन्दीभाषानिबद्धे सूरदाससाहित्ये सविशेषं विलोक्यते। यथा हि वेदव्यासेनेह गोशब्दस्य नानार्थकता सवैचित्र्यं प्रस्तुता तथैव सूरदासो निम्नलिखितायां नायिकोक्तौ सारङ्गशब्दस्य विभिन्नार्थेषु प्रयोगं प्रास्तौत्—

**सारङ्ग सारङ्ग धरहि मिलावहु।**
**सारङ्ग विनय करति सारङ्ग, सो सारङ्ग दुख बिसराबहु।**
**सारङ्गसमै बूहत अति सारङ्ग सारङ्ग तिन्हिं दिखावहु।**
**सारङ्ग गति सारङ्ग धर जे हैं, सारङ्ग जाहि मिलावहु।**
**सारङ्ग चरन सुभग कर सारङ्ग सारङ्ग नाम बुलावहु।**
**सूरदास सारङ्ग उपकारिनि सारङ्ग मरत जियावहु।**

सूरविरचितेऽत्र पद्ये स्थितस्य सारङ्गशब्दस्य टीकाकारैश्चतुर्दशष्वर्थेषु सङ्गतिः प्रकाशिताऽतो हि वेदव्यासकाव्यात्खलु शब्दस्यार्थवैपुल्यमत्र प्रतिभाति परन्तु निगूढार्थकतामधिकृत्य कृष्णद्वैपायनविहितस्य शब्दप्रयोगवैचित्र्यस्य साम्यं नैव विलोक्यते। एवमेव सुवर्णशब्दस्यानेकार्थकतामाश्रित्य विरचिते निम्नलिखिते संस्कृतपद्येऽपि समासाभाववशान्निगूढार्थकता-चमत्कृति-विलासो नैव विलोक्यते—

**सुवर्णस्य सुवर्णस्य सुवर्णस्य च जानकि।**
**प्रेषिता तव रामेण सुवर्णस्य च मुद्रिका॥**

इत्थं हि ज्ञायते यत्खलु विशाले विभिन्नभारतीयभाषानिबद्धे कूटकाव्ये यन्निगूढार्थकताचमत्कारसवैभिन्न्यं विलोक्यते तस्य सर्वस्यैकत्र दर्शनं महाभारते कर्तुं शक्यते।

नानार्थकशब्दानां प्रयोगेण सह महाभारते निगूढार्थकताचमत्कृतिविलासार्थं कविना विशिष्टानां शब्दानां विचित्रविधिना विन्यासो विहितस्तेषां शब्दानां विशिष्ट व्युत्पत्यां त्तौ विचारितायां वक्त्रभिप्रायः प्रकाशते यथा हि जतुगृहवृत्तवर्णनावसरे युधिष्ठिरं बोधयितुं विदुरस्योक्तिरियम्—

**अलोहं निशितं शस्त्रं शरीरपरिकर्तनम्।**
**यो वेत्ति न तु तं घ्नन्ति प्रतिघातविदं द्विषः॥**

**कक्षघ्नः शिशिरघ्नश्च महाकक्षे बिलौकसः ।**
**न दहेदिति चात्मानं यो रक्षति स जीवति ॥**

म० भा० १।१४५।२२-२३

एवं हि शब्दानां नानार्थकत्वं व्युत्पत्तिवैविध्यञ्चानुसृत्य वैशिष्ट्यं विद्योत्यते। तथा च वेदार्थोपबृंहकेऽस्मिन् ग्रन्थे वैदिकवाङ्मयवत्प्रतीक-संवलितानां कूटानामपि प्राचुर्यं विलसति।

सुरभारती-विभूषणात्मकेऽस्मिन् ग्रन्थे कूटप्रयोगस्य विषये कथा-वर्तते यद्धि विशालकायस्य ग्रन्थस्य लेखकत्वमङ्गीकृतवता सर्वज्ञेन श्रीगणेशेन "लेखनसमये सततं कथानकं वक्तव्यं येन हि लिखतो मे लेखनी नावसीदेत्" इति पणः प्रस्तुतस्तदा वेदव्यासेन कथितमासीद् यदबुध्वा मा लिख" एवं पणे कृते यथाऽवसरं विचारविशेषापेक्षामनुसृत्य वेदव्यासः कूटश्लोकविशेषं प्रोक्तवान् येन हि लेखको विचारमग्नो भवेत्तथाऽग्रिम-वृत्तयोजनार्थं वक्ता वेदव्यासः समयं लभेत। एतेषां कूटश्लोकानां विरचनवैशिष्ट्यविषये महाभारतारम्भे लिखितमस्ति यत्—

**ग्रंथग्रंथिं तदा चक्रे मुनिर्गूढं कुतूहलात्। १।१।७७**
**सर्वज्ञोऽपि गणेशो यत्क्षणमास्ते विचारयन्।**
**तावच्चकार व्यासोऽपि श्लोकानन्यान् बहूनपि। १।१।८०**

लेखकस्य गणेशस्य व्यामोहनार्थं वेदव्यासो दुर्विज्ञेयार्थानां कूट-श्लोकानामष्टाशीतिःशतानि महाभारते प्रकाशितवानिति प्रसिद्धिरस्ति; तत्र महाभारतारम्भे सौतिना प्रकाशितं यद्धि—

**अष्टौ श्लोकसहस्राणि अष्टौ श्लोकशतानि च।**
**अहं वेद्मि शुको वेत्ति सञ्जयो वेत्ति वा न वा।**

एतस्य सौतिवचनस्य प्रामाण्यविषये भवतु विमतिर्विदुषां तथाप्ये-तेनेदन्तु सिद्ध्यति यत्खलु महाभारतस्य कूटश्लोकानां दुर्विज्ञेयत्वं चिरात् प्रथितमासीत्। एतेषां महाभारतीयकूटश्लोकश्लोकानामभिधानं ग्रन्थग्रन्थिरिति ग्रन्थेऽत्र प्रस्तुतं वर्तते, नैषधीयचरितमहाकाव्यलेखकः श्रीहर्षोऽपि स्वविरचितकूटपद्यानामभिधानं ग्रन्थग्रन्थिरिति व्यधात्तत्र ग्रन्थान्ते लिखितमस्ति "ग्रन्थग्रन्थिरिह न्यासि प्रयत्नान्मया।" तेषां नैष-धीयचरितस्थानां कूटपद्यानां रचनायाः प्रयोजनं महाभारतीयकूट-पद्यरचनाप्रयोजनाद् भिन्नतां भजते तथापि ग्रन्थद्वयवर्तिनां कूटपद्यानां चमत्कारे तु साम्यं प्रतिभाति। वस्तुतस्तु महाभारतीयानां कूटपद्यानां प्रचुरं वैविध्यं वर्ततेऽत एव परवर्तिना केनचन कविना सर्वेषां कूटचमत्का-राणामनुकरणं विधातुं नैवाशक्यत तत्र प्रतीकप्रधानानां महाभारतीयकूट-श्लोकानां प्रभावस्तु हेवज्रतन्त्रे तथा च गोरक्षनाथादिविरचिते साहित्ये विलोक्यते तथा च शब्दप्रयोगविच्छित्तिमयानां कूटानां प्रभावः श्रीहर्ष-

प्रभृतिसुकविकृतिषु सुभाषिताभिधानेषु विभिन्नकविविरचितेषु मुक्तकेषु समुपलभ्यते ।

**शान्तो हि महाभारतस्याङ्गिरसः—**

सर्वत्रैव प्रबन्धकाव्येषु रसविशेषस्याङ्गित्वेन प्राधान्येन च सन्निवेशः प्रतिभावद्भिः कविभिर्विधेय इति काव्यशास्त्राचार्यप्रस्तुतसिद्धान्तमनुसृत्य महाभारतीय-रसविचारे प्रसृतेऽस्य प्रबन्धस्याङ्गिरसो हि शान्तोऽस्तीति प्रतिपद्यते । कर्णादीनां दानं प्रत्युत्साही ग्रन्थेऽस्मिन् प्रस्तुतस्तथा च विभिन्नान्नां धार्तराष्ट्रपाण्डवपक्षीयानां नृपतीनामत्र काव्ये युद्धोत्साहः प्रामुख्येन प्रकाशितोऽस्तीति हेतोरस्य काव्यस्य वीररस एवाङ्गीति भ्रान्तिर्विजायते परन्तु ग्रन्थस्य पर्यालोचनेन परिचीयते यत्खल्वत्र सांसारिकवैभवस्यासारवत्त्वमेवञ्च कृष्णाख्यपरमेश्वरस्य माहात्म्यमेव प्रधानप्रतिपाद्यतां भजते । धार्तराष्ट्राणां पाण्डवानामितरेषाञ्च नृपतीनां वैभवस्य वर्णनमंत्र वैराग्यानुभूतिजननार्थमङ्गत्वेन प्रकाशितमस्ति । अतिसामर्थ्यवतां विपुलविभूतिमताञ्च पाण्डवानामेवमेव धनधान्यसमृद्धिमतां यादवानामपि विनाशं वर्णितवता कृष्णद्वैपायनेन वैभवस्य तथा च पराक्रमादीनां सर्वेषां गुणानामनित्यत्वं निर्दिष्टमस्ति । वीरकरुणशृङ्गारबीभत्सरौद्रभयानकहास्याद्भुतानामष्टानामपि रसानां विभावानुभावसञ्चारिणो महाकाव्येऽस्मिन् बहुधा बहुत्र सम्यक् परिपोषं प्राप्तवन्तस्तथापि वीरादीनामत्राङ्गत्वमेव विद्यते । यद्यपि युद्धवर्णनबहुलत्वादस्मिन् काव्ये बहुत्र वीररसस्य सर्वातिशायी विलासः प्रतिभाति परन्तु तस्य प्रबन्धव्यापकता नैवास्ति। वीररसस्य भूयसीं विलसितीं प्रस्तूयात्र कविवरो द्वैपायनो वैभववतां पाण्डवादिवीराणां विनाशलीलां प्रास्तौत्तेनाङ्गभूतस्य वीररसस्य विलासोऽङ्गिनश्शान्तरसस्य सविशेषं परिपोषकोऽस्तीति काव्यशास्त्रविदामभिमतम् । एवमेव रौद्ररसस्यापि विशदं वर्णन प्रबन्धस्याङ्गिभूतस्य शान्तरसस्य परिपोषे नास्ति बाधकमित्यत्रापि नास्ति काव्यशास्त्रविदां विमतिरित्थं हि वीरादीनामन्येषां रसानां विभिन्नावसरे विहितः परिपोषः शान्तरसस्याङ्गित्वं नैव व्याहन्तीति सिद्धम् ।

काव्यशास्त्राचार्यविचारानुसारमङ्गिरसस्य प्रबन्धव्याप्तिरपेक्षिताऽस्ति तथा चाङ्गिरसस्य पुनः पुनरनुसन्धानं प्रबन्धे विधेयतां भजते । अङ्गिरसविषयकः सोऽयं काव्यशास्त्रीयसिद्धान्तो वेदव्यासेन सर्वथा पालितोऽस्तीतिग्रंथस्यास्य पर्यालोचनेन परिचीयते । यद्यपि महाभारते विभिन्नस्थलेषु वीरादीनाभङ्गभूतानां प्रचुरविलासो विद्यते तथापि प्रबन्धव्यापित्वं शान्तरसस्यैव सिद्ध्यति यथा हि ग्रंथारम्भे तत्रादिपर्वणि जरत्कारोः पितृभिः सह संलापं प्रस्तुवन् कविवरः प्राणिनां नरकगमनादिवर्णनमाध्यमेनास्मिन् प्रबन्धे शान्तरसस्य प्रामुख्यं प्रकटितवान् ततश्च पुनस्तत्रादिपर्वण्येव वृद्धस्य महाराजस्य ययातेः यौवनप्राप्तिकामनां प्रकाश्य यया-

त्यष्टकसंलापमुखेन विविधकर्मविपाकान् द्वैपायनः प्रास्तौत्। तदनन्तरं सभापर्वणि पाण्डवानां दिग्विजयादिकं प्रस्तुतवता कविवरेण भीष्मादिवचनोपन्यासपूर्वकं श्रीकृष्णमहिमा सविस्तरं प्रस्तुतः। वनपर्वणि तु वेदव्यासादीनां मुनीनां वचनानि शान्तरसानुकूलानि भूयांसि विराजन्ते तथा चात्र पर्वणि पाण्डवानां तीर्थयात्रां वर्णयता कविना भूयो भूयः शान्तरसस्य विभावादयः प्रस्तुताः। विराटपर्वण्यपि युधिष्ठिरविहितं दुर्गास्तवनं प्रस्तुतवता द्वैपायनेन शान्तरसस्य पुनरनुसन्धानं कृतमेवञ्च तत्रोद्योगाख्ये पञ्चमे पर्वणि विविधविषयवर्णनपूर्वकं कविवरो धृतराष्ट्रं प्रति सनत्सुजातेन कृतं मोक्षोपदेशं विशदरूपेण प्रकाशितवान्। भीष्मद्रोणकर्णशल्यपर्वसु वीररसस्य सौप्तिकपर्वणि च रौद्ररसस्य भूयसा विलासेन सह श्रीकृष्णस्य पुनः पुनः स्तवनं प्रस्तुतवता कविवरेण शान्तरसस्य विलासो विहितः तथा च युद्धारम्भेऽर्जुनस्य निर्विण्णतां श्रीकृष्णकृतं समुपदेशञ्च सविस्तरं पठितवतां पाठकानां चित्ते जातः संसारासारताबोधो विशिष्टस्थैर्यं भजते। युद्धवर्णनान्तरं स्त्रीपर्वणि करुणेन सह शान्तस्याप्यनुभूतिर्विशिष्टरूपेण भवत्येव।

तदनन्तरं महाभारतस्य द्वादशे पर्वणि शान्तिपर्वणि सर्वतः पूर्वं युधिष्ठिरनिर्वेदः समुपन्यस्तस्तत्र कर्णस्य सहोदरत्वं विज्ञातवतो युधिष्ठिरस्योक्तिषु निर्वेदप्रकाशनातिशयः परिलक्ष्यते। शान्तिपर्वानन्तरमनुशासनाश्वमेधिकाश्रमवासिकमौसलमहाप्रस्थानिकस्वर्गारोहणाख्येषु प्रबन्धान्तिमेषु षट्सु पर्वसु शास्त्रविज्ञवचनोपन्यासं विदधता कृष्णद्वैपायनेन संसारासारताविवेचनं सम्यक् प्रस्तुतमत एव प्रबन्धस्यास्याङ्गिरसः शान्तोऽस्तीति काव्यशास्त्रविद्भिरङ्गीक्रियते। तत्र ध्वन्यालोकस्य चतुर्थोद्योते महाभारतस्याङ्गीरसं विवेचयताऽऽनन्दवर्धनेन स्पष्टमेव समुद्घोषितं यद्धि "महाभारतेऽपि शास्त्रकाव्यरूपच्छायान्वयिनि वृष्णिपाण्डवविरसावसानवैमनस्यदायिनीं समाप्तिमुपनिबध्नता महामुनिना वैराग्यजननतात्पर्यप्राधान्यं स्वप्रबन्धस्य दर्शयता मोक्षलक्षणः पुरुषार्थः शान्तो रसश्च मुख्यतया विवक्षाविषयत्वेन सूचितः।"

महाभारतप्रारम्भेऽनुक्रमणिकापर्वणि महाभारतप्रतिपादितानां विषयाणां समुल्लेखो विराजते परन्तु तत्र शान्तरसस्य चर्चा नैवास्तीति हेतोः कथं ह्यस्य प्रबन्धस्याङ्गिरसः शान्तः? इति विचिकित्सायाः निवृत्तये ध्वनिकारेणानन्द वर्धनेन निर्दिष्टं यत्खलु प्रधानविवक्षितस्यास्य नामनिर्देशात्स्वशब्दवाच्यता रस दोषः समापतेदिति दृशा शान्तस्य नामोल्लेखं परित्यजन् वेदव्यासो व्यङ्ग्यरूपेणैव शान्तरसं समुपनिबध्नात् तथा च ग्रन्थ मध्ये—

**यथा यथा विपर्येति लोकतन्त्रमसारवत्।**
**तथा तथा विरागोऽत्र जायते नाऽत्र संशयः॥**

इत्यादिभिर्वाक्यैर्बहुधा संसारासारता ग्रन्थकारेण विवेचितैव। वस्तुतः कृष्णद्वैपायनेन महामुनिना महाभारतस्य रचना मोक्षोपदेशार्थमेवञ्च सांसारिकसुखभोगानित्यत्वं साधयितुं विहितेति प्रतिपद्यते।

**वेदव्यासस्य व्यक्तित्वं कृतिमत्त्वञ्च——**

महाभारतरचयितुः कृष्णद्वैपायनवेदव्यासस्य महाभारतीयकथानायकैः पाण्डवैस्तथा च धार्तराष्ट्रैः साकं पारिवारिकसम्बन्ध आसीदिति महाभारते पुराणेषु च प्रथितमस्ति। धृतराष्ट्रस्य पाण्डोश्च समुत्पत्तिः कृष्णद्वैपायनवीर्याद्द्विजातेति दृशा कृष्णद्वैपायनः पाण्डवानां धार्तराष्ट्राणाञ्च पितामहोऽवर्तत। महाभारतारम्भे सौतिना प्रकाशितं यत्खलु "सत्यवती"-इतिविख्याता मत्स्यगन्धानाम्नी निषादकन्या पराशरमुनिसमागमात् कृष्णवर्णमेकं पुत्रं यमुनाद्वीपे जनयामास। सोऽयं पुत्रः कृष्णद्वैपायन इति नाम्ना प्रसिद्धिं लेभे। सत्यवतीगर्भजोऽयं बालो महातपस्वी सञ्जातः। कालान्तरे हि निषादकन्या सत्यवती शान्तनुपत्नीत्वमवाप्य चित्राङ्गदविचित्रवीर्याभिधानौ पुत्रौ जनयामास। तत्र चित्राङ्गदे निःसन्ताने मृते विचित्रवीर्यं वीर्याच्चापि सन्तानसमुद्भवाभावे सा दुःखिताऽभूत्। तस्मिन् समये सा सत्यवती पराशरसंयोगात्समुत्पन्नं स्वप्रथमतनयं कृष्णद्वैपायनमाहूय नियोगविधिना कुरुवंशविस्तारं समपादयत्। मातुः सत्यवत्या आदेशं पालयितुं कृष्णद्वैपायनः पाराशरः शान्तनवस्य विचित्रवीर्यस्य पत्नीभ्यामम्बिकाऽम्बालिकाभ्यां साकं समागमं व्यधाद् येन हि धृतराष्ट्रः पाण्डुश्च समुत्पन्नावित्थं हि कुरुवंशस्य विस्तारकत्वं कृष्णद्वैपायनस्य प्रसिद्धमस्ति। एष कृष्णद्वैपायनः पराशरपुत्रत्वेन शक्तिपौत्रत्वेन वसिष्ठनप्तृत्वेन शुकदेवजनकत्वेन च प्रसिद्धो यथा हि—

**व्यासं वशिष्ठनप्तारं शक्तेः पौत्रमकल्मषम्।**
**पराशरात्मजं व्यासं वन्दे शुकतातं तपोनिधिम्॥**

अत्र व्यासवन्दनायां कृष्णद्वैपायनवेदव्यासस्य पारिवारिकपरम्परायाः स्पष्टनिर्देशो विराजते।

कृष्णद्वैपायनस्य प्रमुखं कर्म वेदव्यसनं विद्यते। अनेन महामुनिना वेदसंहितायाः विभागाः कृतास्ततो हि वेदव्यास इति पदवी प्राप्ता। कृष्णद्वैपायनात्पूर्वमन्यैर्यैः खलु वेदव्यसनं कृतं तेषामपि संज्ञा वेदव्यास इति वर्तते। पुराणानुसारं वेदव्यासानां विष्णववतारत्वं प्रथितमस्ति यथा हि विष्णुपुराणे प्रकाशितमस्ति—

**'द्वापर द्वापर विष्णुर्व्यासरूपी महामुने।**
**वेदमेकं सुबहुधा कुरुते जगतो हितः॥**
**वीर्यं तेजो बलं चाल्पं मनुष्याणामवेक्ष्य हि।**
**हिताय सर्वभूतानां वेदभेदान् करोति सः॥**

वि० पु० ३।३।५-६

एतेन परिचीयते यत्खलु वेदव्यसनं कृष्णद्वैपायनात्पूर्वं यैः कृतं तेऽपि वेदव्याससंज्ञकाः सन्ति। अयं हि कृष्णद्वैपायनो वैवस्वतमन्वन्तरस्याष्टाविंशतितमे द्वापरे वेदव्यसनं व्यधादितः पूर्वं द्वापरसप्तविंशत्यां यैर्विष्णववतारैः खलु लोके वेदव्यसनं विहितं तेषां नामानि ब्रह्मा, प्रजापतिः, शुक्राचार्यो बृहस्पतिः सूर्यः, यम इन्द्रो वसिष्ठः सारस्वतस्त्रिधामास्त्रिशिखो भरद्वाजोऽन्तरिक्षो वर्णी त्र्यारुणो धनञ्जयः ऋतुञ्जयो भरद्वाजो गौतमो हर्य्यात्मा वाजश्रवाः सोमसुषमायणतृणबिन्दुर्भार्गव ऋक्षः (वाल्मीकिः) शक्तिः पराशरो जातुकर्णश्चेति पुराणेषु प्रकाशितानि सन्ति। अत्र वेदव्यासनामावल्यां कृष्णद्वैपायनस्य पिता षड्विंशतिसंख्यकवेदव्यासत्वेन प्रस्तुतस्तथा च कृष्णद्वैपायनमातृमहस्य वसिष्ठस्य नाम खल्वष्टमवेदव्यासत्वेन निर्दिष्टमस्ति कृष्णद्वैपायनस्य तत्पितुः मातृमहस्य च कथं युगभेदो भवितुमर्हतीति विषये विद्वद्भिर्बहुधा प्रकल्प्यते। केचिदेषां महापुरुषाणां दीर्घजीवित्वं कल्पयन्ति। अत्र सूच्यां भरद्वाजस्य द्विवारं नामोल्लेखो वर्ततेऽनेन परिचीयते यत्खलु नैकेषां समानवंशसम्भवत्वमनुसृत्यैकस्याः संज्ञायाः बहुत्र व्यवहारो जातोऽर्थात् भरद्वाजवंशजस्यापि संज्ञा भरद्वाज इत्येव प्रचलिताऽभूत्। अत्र नाम साम्यमनुसृत्येत्थमपि प्रकल्प्यते यद् विभिन्नेषु युगेषु विभिन्नाः भरद्वाजा अभूवन्निति। एवमेव पराशरवशिष्ठयोर्नामिनी युगान्तरेऽन्याभ्यां महापुरुषाभ्यां धृते स्तः। इत्थं पूर्ववर्तिनां सप्तविंशतिवेदव्यासानां परिचयस्याभावोऽस्ति परन्तु कृष्णद्वैपायनस्यान्तिमवेदव्यासस्य महाभारतयुद्धकालवर्तित्वमैतिहासिकाः स्वीकुर्वन्त्येवञ्च पुरालेखैरैतिहासिकप्रमाणान्तरैश्च कृष्णद्वैपायनस्य स्थितिः पञ्चसहस्रवर्षपूर्वं साध्यते तथा च पुराणवचनैरस्य पाण्डुजनकत्वं प्रथितमस्ति।

वेदव्यसनातिरिक्तं कृष्णद्वैपायनेन ब्रह्मसूत्राख्यस्य जीवेश्वराद्वैतस्थापकस्य वेदान्तदर्शनप्रमुखग्रंथस्य रचना कृता तथा चाष्टादश महापुराणानि कृष्णद्वैपायनेन विरचितानीति प्रसिद्धमस्ति। अनेनैव विविधविद्याविशारदेन कृष्णद्वैपायनेन जयापरपर्यायस्य महाभारताख्यस्यास्य ग्रंथस्यापि विरचनं विहितमिति भारतीयानां विपश्चिदामभिमतमस्ति।

**महाभारतस्य वेदमूलकता—**

महाभारतस्य पुराणानाञ्च रचनायाः प्रमुखोद्देश्यं वेदसंरक्षणमासीद् यथाहि कथित मस्ति—

**इतिहासपुराणाभ्यां वेदं समपबृंहयेत्।**
**बिभत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति॥**

इतिहासरूपेऽत्र महाभारतेऽपि वेदव्यासः पुराणवदेव वेदार्थोपबृंहणं कृतवान्। तत्र पुराणेतिहासग्रन्थेषु वेदार्थोपबृंहणार्थं वेदमन्त्राणां यथावत् पाठोऽपि बहुत्र प्रस्तुतस्तथा च क्वचित्क्वचित्पाठपरिवर्तनपूर्वकं वेदमन्त्राः प्रस्तुताः सन्ति यथा हि महाभारते धृतराष्ट्रं प्रति सनत्सुजातोक्तिर्विद्यते—

पूर्णात् पूर्णान्युद्धरन्ति पूर्णात् पूर्णानि चक्रिरे ।
हरन्ति पूर्णात् पूर्णानि पूर्णमेवावशिष्यते ॥

अत्र हि प्रज्ञाचक्षुषं धृतराष्ट्रं ब्रह्मविद्यां समुपदिशतः सनत्सुजातस्योक्तौ खल्वीशोपनिषदः स्पष्टप्रभावो विलोक्यते । अत्रोपनिषदः "पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते" इत्यादिकं वाक्यं किञ्चित्पदपरिवर्तनपूर्वकं यथावदेव प्रकाशितमस्ति । तथा च श्रीमद्भगवद्गीतोपनिषदि सर्वासामुपनिषदां सारः संगृहीतोऽस्तीति विद्वद्विचारमनुसृत्य महाभारतस्य वेदार्थोपबृंहणपरत्वं स्पष्टमेव ।

वेदार्थोपबृंहणार्थं विरचिते महाभारते "सत्यं वद धर्मं चर" इति संक्षिप्तस्य वेदवाक्यस्य प्रबन्धव्यापकता विभाति यतो हि युधिष्ठिरस्य समग्रं जीवनचरित्रममुमेव वेदमन्त्रमधिकृत्य प्रवर्तते । यथा हि प्रबन्धाङ्गिरसस्य प्रबन्धव्याप्ति पुनः पुनः समुन्मीलनञ्च विधातुं कविवरेण यथाप्रसङ्गं शान्तरसस्य विभावादिकं प्रस्तुतं तथैव "सत्यं वद धर्मं चर" इति वेदोपदेशस्यापि महाभारते प्रबन्धव्यापकता प्रतिभाति । इत्थं हि महाभारतस्य पुराणानां ब्रह्मसूत्राणाञ्च सर्वासामेव वेदव्यासकृतीनां वेदसम्बन्धः प्रतीयते । एवं हि कृष्णद्वैपायनो वेदमन्त्रसंहिताव्यसनेन सह वेदार्थस्यापि व्यसनं व्यधादिति परिचीयते ।

महाभारते धर्मस्य माहात्म्यं तत्स्वरूपञ्च—

कृष्णद्वैपायनवेदव्यासो महाभारते पुरुषार्थचतुष्टयस्य विवेचनं विहितवानतो हि प्रसिद्धमस्ति—

अर्थशास्त्रमिदं प्रोक्तं धर्मशास्त्रमिदं महत् ।
कामशास्त्रमिदं प्रोक्तं व्यासेनामितबुद्धिना ॥

म० भा० १।१।३८३

अत्र पद्ये मोक्षशब्दस्य प्रयोगाभावान्मोक्षप्रतिपादनाभावो महाभारते नैव कल्पनीयम् । यथा हि प्रबन्धाङ्गिरसस्य शान्तस्य नामोल्लाखाभावेऽपि महाभारतस्य शान्तप्रधानत्वं व्यज्यते तथैव प्रबन्धे निर्वेदजनकस्य वृत्तस्य प्रकाशनबाहुल्यादस्य ग्रन्थस्य मोक्षशास्त्रत्वमपि प्रसिद्ध्यति । ब्रह्मसूत्रे पुराणेषु च मोक्षाख्यस्यान्तिमपुरुषार्थस्य सविस्तरं विवेचनमस्ति परन्त्वत्र महाभारते धर्मरूपस्य मोक्षसाधनमार्गस्य चर्चा प्राधान्यं भजते । मोक्षप्राप्तिरपि धर्माचरणं विना न युज्यते यथा हि मनुस्मृतौ प्रकाशिमस्ति—

अनधीत्य द्विजो वेदान् अनुत्पाद्य सुतानपि ।
अनिष्ट्वा शक्तितो यज्ञैर्मोक्षमिच्छन् पतत्यधः ॥

इत्थं हि स्मृतिवचनमनुसृत्य वेदव्यासो मोक्षप्राप्तिप्रसङ्गेऽपि धर्मस्यापेक्षां मत्वा जीवने धर्माचरणस्य प्राधान्यं प्रकाशितवान् । वेदव्यासेन जीवने धर्माचरणस्य माहात्म्यं प्रकाशयताऽर्थकामयोरपि प्राप्तिर्धर्माधीनेति

प्रतिपादितमस्ति, तस्य समुद्घोषणा वर्तते-–

**ऊर्ध्वबाहुर्विरौम्येष न कश्चित् शृणोति मे ।**
**धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥**

धर्मस्य लाभो देहत्यागान्तरमेव न प्राप्यो वर्ततेऽपितु धर्मफलं जीवनेऽपि विलोक्यतेऽत एव वर्णाश्रमधर्माणां जीवनोपयोगित्वं प्रकाशयितुं शान्तिपर्वणि भीष्ममुखेन प्रकटितं यत्—

**सर्वत्र विहितो धर्मः सत्यप्रेत्य तपः फलम् ।**
**बहुद्वारस्य धर्मस्य नेहास्ति विफला क्रिया ॥**

अस्मिन् जगत्यधर्माचरणरतानां जनानां समृद्धि विलोक्याधर्मे मतिर्नैव विधेयेति प्रतिपादयतो लोमशमहर्षिणो महाभारतवनपर्वणि कथनं वर्तते—

**वर्धत्यधर्मेण नरस्ततो भद्राणि पश्यति ।**
**ततः सपत्नान् जयति समूलस्तु विनश्यति ॥** म० भा० ५।९४।४

अयमेवाभिप्रायः शान्तिपर्वणि भीष्मोक्तिरूपेणेत्थं प्रस्तुतोऽस्ति—

**धर्मादपेतं यत्कर्म यद्यपि स्यान्महत्फलम् ।**
**न तत्सेवेत मेधावी न तद्धितमिहोच्यते ॥**

म० भा० १२।२९३।८

महर्षिणा वेदव्यासेनात्र महाभारते युधिष्ठिरपक्षस्य धर्ममयत्वं दुर्योधनपक्षस्य चाधर्ममयत्वं सम्यक् प्रस्तुतवता धर्मस्याधर्मस्य च सविस्तरं विवेचनं विहितमिति हेतोर्महाभारतारम्भे ग्रन्थप्रतिपाद्यप्रकाशनावरे प्रकटितं यत्—

**दुर्योधनो मन्युमयो महाद्रुमः स्कन्धः कर्णः शकुनिस्तस्य शाखाः ।**
**दुःशासनः पुष्पफले समृद्धे मूलं राजा धृतराष्ट्रोमनीषी ॥**
**युधिष्ठिरो धर्ममयो महाद्रुमः स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखाः ।**
**माद्रीसुतौ पुष्पफले समृद्धे मूलं कृष्णो ब्रह्म च ब्राह्मणाश्च ॥**

म० भा० १।१।११०-१११

इत्थं हि प्रतिभाति यन्महाभारतस्य मुख्यं प्रतिपाद्यं धर्माचरणमेव वर्तते । "धर्मो हि विश्वस्य जगतः प्रतिष्ठा" इति विचारं प्रकाशयता वेदव्यासेनात्र ग्रन्थे धर्माचरणं प्रति सततं जागरूकैर्भाव्यमिति समुपदिष्ट-मस्ति । धर्मस्य माहात्म्यमधिकृत्य महाभारतारम्भे प्रकाशितमस्ति—

**धर्मे मतिर्भवतु वः सततोत्स्थितानां**
**स ह्येक एव परलोकगतस्य बन्धुः ।**
**अर्थाः स्त्रियश्च निपुणैरपि सेव्यमाना**
**नैवाप्तभावमुपयान्ति न च स्थिरत्वम् ॥**

म० भा० १।२।३९१

धर्माचरणसमुपदेवप्रधाने महाभारते सर्वेषामेव वर्णाश्रमधर्माणां यथाप्रसङ्गं विवेचनं प्रस्तुतमस्ति तथा चैषां सर्वेषां धर्माणामाश्रयो नृपो भवतीति प्रतिपादितम्। समाजे राज्ञो महत्त्वं प्रकाशयता भीष्मेण तत्र शान्तिपर्वणि स्पष्टमेव निर्दिष्टं यत्—

**न चेद् राजा भवेद् दाता कुतः स्युर्मोक्षकांक्षिणः।**
**अन्नाद् गृहस्था लोकेऽस्मिन् भिक्षवस्तत एव च॥**
**अन्नात् प्राणः प्रभवति अन्नदः प्राणदो भवेत्।**
**गृहस्थेभ्योऽपि निर्मुक्ता गृहस्थानेव संश्रिताः।**
**प्रभवं च प्रतिष्ठाञ्च दान्ताः विन्दन्त आसते॥**

इत्थं हि लोके गृहस्थाश्रमस्य सर्वाश्रमाश्रयत्वं प्रतिपादितवता वेदव्यासेन सर्वेषां वर्णधर्माणामाश्रमधर्माणाञ्च प्रतिष्ठा नृपाश्रिता भवतीति प्रकाशितम्।

वेदव्यासमतानुसारं गृहस्थाश्रमिकर्तव्येषु पञ्चमहायज्ञानुष्ठानं सर्वातिशायि विद्यतेऽत एव महाभारते शान्तिपर्वणि विघसाशिनां प्रशंसा विशदरूपेण प्रस्तुता। तत्र शान्तिपर्वणि प्रकाशितं यत्कदाचिद् अजातश्मश्रूणां बालसंन्यासिनां समुपदेशार्थमिन्द्रेण विघसाशिप्रशंसाप्रसङ्गे प्रोक्तम्—

**सायं प्रातर्विभज्यान्नं स्वकुटुम्बे यथाविधि।**
**दत्त्वातिथिभ्यो देवेभ्यः पितृभ्यः स्वजनाय च।**



**अवशिष्टानि येऽश्नन्ति तानाहुर्विघसाशिनः॥**

म० भा० १२।११।२३-२४

पञ्चमहायज्ञाचरणनिष्ठस्य युधिष्ठिरस्य जीवनचरित्रं प्रस्तुवन् वेदव्यासो महाभारते विभिन्नाख्यानोपाख्यानैर्धर्मस्य व्यापकं विवेचनं कृतवान्। वस्तुतोऽस्मिन् महाभारते युधिष्ठिरजीवनचरित्रस्य प्रकाशनव्याजेव मानवधर्मस्य साङ्गोपाङ्गं विवेचनं विहितमस्तीति हेतोः प्रसङ्गविशेषे प्रस्तुतानां विभिन्नानां धर्माणां परस्परं विरोध आभासते परन्तु समग्रग्रन्थपर्यालोचनेन परिचीयते यत्खल्वत्र युधिष्ठिरस्य जीवनं विरोधपरिहारपूर्वकंधर्माचरणस्यादर्शरूपेण प्रस्तुतमस्ति।

**भारतभावदीपस्य वैशिष्ट्यम्—**

कृष्णद्वैपायनवेदव्यासविरचितस्य महाभारताख्यग्रन्थस्य भावं प्रकाशयितुं बहुभिष्टीकाकारैः प्रयतितमेवञ्च कैश्चिद् विपश्चिदपश्चिमैर्महाभारतीयांशविशेषाणां श्रीमद्भगद्गीतोपनिषत्प्रभृतीनां सविस्तरं विवेचनं प्रस्तुतमेतेषु महाभारतविवेचकेषु महापुरुषेषु नीलकण्ठाचार्यस्य प्रमुखतमं पदं विद्यते। भारतभावदीपे प्रस्तुतेऽन्यासां महाभारतीयटीकानां प्रायशो विलोप इव विजातः। सम्प्रति तासां चर्चा संस्कृतसाहित्येतिहासग्रन्थेष्वेव विद्यते। क्रिष्टाब्दानां सप्तदशशतकस्योत्तरार्द्धे महाराष्ट्रप्रदेशादागत्य काशीपण्डितमण्डलं सुशोभितवता श्रीनीलकण्ठेन भारतभावदी-

पाख्या सर्वातिशायिनी या महाभारतटोका विरचिता तस्या: महत्त्वं निगूढ-भावप्रकाशनमाश्रित्य प्रवर्तते। वस्तुतो भारतभावदीपाख्येऽत्र व्याख्याने पदस्वरूपपरिचयकारिणी पद्धतिर्नैवास्ति स्वीकृता, भावप्रकाशनस्यैव प्राधान्यं परिलक्ष्यते। स्वविरचिताया: भारतभावदीपाख्यटीकाया: विषये नीलकण्ठस्य सविनयं कथनं विद्यते—

**टीकान्तराणीन्दुरविप्रभाणि बाह्यार्थरत्नानि च कासयन्तु।**
**अन्तर्निगूढार्थचयप्रकाशे दीपः क्षमो भारतमन्दिरेऽस्मिन्॥**

वस्तुतष्टीकान्तरेषु कूटपद्यानां विवेचनवैशिष्ट्यं भवतु नाम परन्तु समस्तस्य ग्रन्थस्य प्रतिपाद्यन्तवस्य भारतभावदीपस्यैव प्रकाशेनालोकितं भवतीति दृशा नीलकण्ठाचार्यविहितस्य व्याख्यानस्य विशिष्टो महिमा विद्यते।

महाभारतस्य प्रारम्भो नारायणं नमस्कृत्य नरञ्चैव नरोत्तम-मित्यादि मङ्गलपद्येन भवतीति स्वीकुर्वाणेन नीलकण्ठाचार्येणास्य पद्यस्य व्याख्याने सर्वशास्त्राणां सार: प्रकाशितोऽस्ति। भारतभावदीपाख्यस्य व्याख्यानस्य वैशिष्ट्यं विद्यते यत्खल्वत्र पर्वारम्भे सर्वत: प्राक् पर्वाख्यान-सङ्गतिप्रकाशनपूर्वकं वेदव्यासरचनाऽभिप्रायो दर्शितोऽस्ति यथा हि भक्त-प्रवरो नीलकण्ठाचार्य: पाण्डवानां लाक्षागृहादिवृत्तमादिपर्वणि प्रस्तूय सभापर्ववृत्तव्याख्यानात्पूर्वं सर्वप्रथमं विवेचितवान् यद्धि "तत्र पूर्वस्मिन् पर्वण्यन्ते शार्ङ्गका: ज्ञानबलादेव वह्निमुखाद्विमुक्ता इत्युक्तं तच्च ज्ञानं भगवद्भक्तिबलादेव लभ्यते इति प्रतिपादनायेदं सभापर्व आरभ्यते। तदग्रे नीलकण्ठो लिखतिस्म यत्। द्वेषेणापि भगवद्ध्यानं भगवत्सायुज्यप्रापकमिति शिशुपालनिर्याणेन ध्यानमाहात्म्यम्, निरपराधिष्वपि पाण्डवेषु दुर्योधना-दीनां द्वेषोत्पत्त्याऽभक्तदोषा:, द्यूते द्रौपदीत्राणेन भक्तपक्षपातित्वं समर्थाना-मपि पाण्डवानां सापराधेष्वपि दुर्योधनादिष्वकोपेन भक्तानां तितिक्षा चेति भक्तगुणाश्च दर्शिता:।" इत्थं सभापर्ववृत्तस्य भक्तिशास्त्रविषयकविवेचनं प्रकाशितवत: श्रीनीलकण्ठाचार्यस्य भक्तिवादवैचक्षण्यं स्पष्टमेव विद्योतते।

कृष्णद्वैपायनवेदव्यासेनाष्टादशपर्वात्मके महाभारते पुरुषार्थचतुष्ट-यस्य विशदं विवेचनं विहितमिति भारतभावं प्रकाशयता श्रीनीलकण्ठा-चार्येण प्रकाशितं यद्धि वेदव्यासस्तत्रादिपर्वणि सभापर्वणि वनपर्वणि च धर्मस्य विशदं विवेचनं विधाय विराटोद्योगभीष्मद्रोणाख्येषु चतुर्षु पर्व-स्वर्थस्य प्रकाशनानन्तरमधर्मस्यानर्थस्य धर्माभासस्यानर्थाभासस्य चापि प्रकाशनापेक्षाऽस्तीति विचार्य कर्णादिकानि पर्वाणि व्यरचयत्। तत्र कर्ण-पर्वप्रारम्भे श्रीनीलकण्ठ: पर्वकथानकसङ्गतिं निर्देष्टुं व्यलिखत् "ननु विराटादिपर्वचतुष्टयतात्पर्यक्रमेणार्थलुब्धानामर्थ: सेवयाऽनीत्या कपटपूर्व-केण कुलवृद्धवधेन नृशंसानृतपूर्वकेण महागुरुवधेन च सिद्ध्यति इत्युक्तं तावतैवार्थनिरूपणं समाप्तम् अत: परं काममोक्षावेव निरूपणीयाविति कर्ण-

पर्वादित्रयं नारम्भणीयमिति चेत्सत्यम् यथा धर्मार्थौ निरूपितौ, एवं धर्माभासोऽर्थाभासश्च निरूपणीयः परिहाराय । एवमधर्मानर्थौ अधर्माभासानर्थाभासौ च निरूपणीयौ हानोपादानाय च । तदर्थमुत्तरग्रन्थः काममोक्षयोः प्रागावश्यकः ।" कर्णपर्वारम्भस्थेनैतेन नीलकण्ठाचार्यकथनेन भारतभावदीपाख्यायाष्टीकायाः सम्यक् स्वरूपावबोधो खलु भवति । शास्त्रविचारविहीनैः कैश्चित्पण्डितम्मन्यैः भीष्मद्रोणादिविरोधिनां पाण्डवानां पक्षो नैवन्याययुक्त आसीदिति कथ्यते, भारतभावदीपव्याख्यानेनैतादृशीनां विविधानां विप्रतिपत्तीनां निरासो विधीयते ।

वस्तुतोऽयं भारतभावदीपो महाभारतस्य व्याख्यानमुखेन भारतदेशस्य विचारधारां शास्त्रपरम्परां संस्कृतिञ्च दीपयति । वेदव्यासस्याभिप्रायप्रकाशनतत्परेण नीलकण्ठाचार्येणात्र महाभारतव्याख्याने वेदव्यासकृत्यन्ताराणां पुराणानां ज्ञानस्य भूयान् प्रयोगो विहित इति परिलक्ष्यते । महाभारते तु भक्तेः सूक्ष्मरूपेणैव चर्चा विलसति परन्तु महाभारतीयव्याख्यानेऽस्मिन् भक्तिधारा बहुधा प्रवहति तत्र कारणमस्ति वेदव्यासविरचितस्य पुराणराशेः परिशीलनम् ।

महाभारतभावं प्रकाशयितुं प्रवृत्तेन नीलकण्ठाचार्येण वेदव्यासस्य कटरचनानिपुणत्वमपि सम्यग् विज्ञातमासीत्तेन हि कूटश्लोकानां यत् स्फोटनं प्रस्तुतं तस्यैव पण्डितमण्डल्यां प्रचारो दरीदृश्यते । वस्तुतो नीलकण्ठाचार्यव्याख्यानं हृदयहारितां भजते ।

वर्षपञ्चकात्पूर्वं मानवसंसाधन विकास मन्त्रालयेन तदानीं संयुक्तशिक्षा सचिवपदमलङ्कुर्वाणायाः श्रीमत्याः कपिलावास्त्यायनमहोदयायाः सत्परामर्शमनुसृत्य पौराणिकवाङ्मयस्य तथाचान्येषां महत्त्वपूर्णसंस्कृत ग्रन्थानां पुनर्मुद्रणार्थं निर्णयः कृतः । अयं निर्णयः संस्कृतवाङ्मयस्य संरक्षणेतिहासे विशिष्टं महत्त्वं भजते । मन्त्रालयेन निर्धारितस्यास्य कार्यक्रमस्य क्रियान्वयने नागप्रकाशनस्य संस्थापकस्य श्रीनागशरणसिंहमहोदयस्य सविशेषं योगदानं विद्यते । अयं हि महाभारतस्य पुनर्मुद्रणविधिरपि तस्यैव प्रयासेन सम्पन्नः । अस्य ग्रन्थस्य पुनर्मुद्रणेन नागप्रकाशनस्य विशिष्टग्रन्थप्रकाशनगौरवं सविशेषं वर्धितमस्ति । एतस्य सत्प्रयासस्य कृते श्री नागमहोदयानां हार्दिकमभिनन्दनं विदधामि ।

विदुषामाश्रवः

**डा० मण्डनमिश्रः**

निदेशकः राष्ट्रिय संस्कृतसंस्थानस्य

प्राचार्यः श्रीलालबहादुरशास्त्रीकेन्द्रीयसंस्कृत विद्यापीठस्य

ऋषिपञ्चमी

वि० सं० २०४५

# अथ श्री महाभारते सटीकं आदिपर्व प्रारभ्यते

श्रीः

# आदिपर्व ।



## अनुक्रमणिका ।



( ६ ) अंशावतरणपर्व



( ७ ) संभवपर्व

आदिपर्वसमाप्तिः ।

आदिपर्व १ अवान्तरपर्वाणि १९ अध्यायाः २३४ श्लोकाः ८३७३.

श्रीगणेशायनमः ॥ ॥ श्रीवेदव्यासायनमः ॥ ॥ श्रीगुरुभ्योनमः ॥ ॥ यंवक्रंमुकुराइवेंद्रियमनोमायाःपराग्दृश्यतांनिन्युस्तत्स्थविमादिनापिचविराट्सूत्रेशभावंगतम् ॥ तंप्रत्यग्दृग्दृश्यमक्ष
रमणुंत्वक्कोपनेत्रत्रयाःश्रीगोपालमुपास्महेश्रुतिशिरोवंशीरवैर्दर्शितम् ॥ १ ॥ बाह्यःस्तेनाभिभाषीबहिरुदवासितंपातितकोऽप्रतिष्ठोमीमांसाप्रातिहार्यंभजतिगुणगणंयस्यसंख्यातिसांख्यः ॥ हृत्पीठे
योगशुद्धेनिहितमुपनिषद्दाहवृन्दैःपरंमेभाग्यंश्रीलक्ष्मणार्योजगतिविजयतेयस्यलेशाःशिवाद्याः ॥ २ ॥ हरिविधिवसिष्ठशक्तिपराशरव्यासशुकदेवान् ॥ वैशंपायनमुग्रश्रवसंचनुमःपुराणगुरुमुख्यान्
॥ ३ ॥ कणभक्षमक्षचरणंजैमिनिकपिलौपतंजलिंचनुमः ॥ श्रीमद्व्यासवचोंबुधिनयसीकरवर्षिणोमुदिरान् ॥ ४ ॥ सर्वविघ्नेशतामाविश्विकोर्षूपूर्वपूरुषौ ॥ श्रीनारायणधीरेशरूपौहरिहरौनुमः
॥ ५ ॥ बहून्समाहृत्यविभिन्नदेश्यान्कोशान्विनिश्चित्यचपाठमग्र्यम् ॥ प्राचांगुरूणामनुसृत्यवाचमारभ्यतेभारतभावदीपः ॥ ६ ॥ टीकांतराणींदुर्रविप्रभाणिबाह्यार्थरत्नानिचकासयंतु ॥ अंत
र्निगूढार्थचयप्रकाशेदीपःक्षमोभारतमंदिरेऽस्मिन् ॥ ७ ॥ ईशप्रसादादवितुंस्ववंश्यान्भगीरथेनेवमयाप्रणीता ॥ एषामहाभारततीर्थगंगालोकत्रयीजाड्यमलंधुनोतु ॥ ८ ॥ उत्तानोऽविहकोशवि
ग्रहबलंपद्येषुनैवाश्रितंगंभीरेषुनसेतवोनविहिताःकूटाननस्फोटिताः ॥ नछिन्नानतमश्वराननतिर्भक्ताननाह्लादितानोदीनानविभीषणाश्चविहिताःश्रीलक्ष्मणार्यश्रितैः ॥ ९ ॥ इहखलुभगवान्
पाराशर्यः परमकारुणिको मंदमध्यममतीननुग्रहीतुं चतुर्दशविद्यास्थानरहस्यान्येकत्रप्रदिदर्शयिषुर्महाभारताख्यमितिहासंप्रणेष्यन् प्रारिप्सितस्यग्रंथस्यनिष्प्रत्यूहपरिपूरणायप्रचयगमनायच कृतं
मंगलं शिष्यशिक्षायैश्लोकरूपेणनि बध्नन्नर्थात्तत्रप्रेक्षावत्प्रवृत्त्यंगमभिधेयंप्रदिदर्शयति नारायणमिति । नरोऽविद्यावच्छिन्नंचैतन्यंजीवः तेनाविषयीकृतेऽनवच्छिन्नचैतन्यरूपेब्रह्मणिशुक्तौरजतवत्कलिप

॥ श्रीवेदव्यासायनमः ॥ नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ॥ देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥ १ ॥

तंचराचरमप्रशब्दवाच्यंनारं तदेवायनंशुक्तीदमंशस्यरजतमिवप्रवेशस्थानंयस्यसनारायणः । स्वस्मिन्जीवकल्पितस्यप्रपंचस्यसत्तास्फूर्तिप्रदत्वेनकारणीभूतइत्यर्थः । यथोक्तं । ‘आपोनाराइतिप्रो
क्ताआपोवैनरसूनवः ॥ अयनंतस्यताःपूर्वंतेननारायणःस्मृतः’ इति तंनारायणंनमस्कृत्य तथानरमुक्तरूपंनमस्कृत्य एनंविशिनष्टि नरोत्तममिति । जीवोहिचेतनत्वेनजडवर्गादुत्कृष्टस्ततउत्कृष्टतरः
कारणात्मानारायणस्ततोप्युत्कृष्टतमंनिरुपाधिचैतन्यं‘सत्यंज्ञानमनंतंब्रह्म विज्ञानमानंदंब्रह्म’ इत्यादिश्रुतिषुप्रसिद्धं तदेवनरोत्तमस्यनिरस्ताविद्यस्यजीवस्यनिष्प्रपंचंपारमार्थिकंरूपमितियुक्तं तत्रोत्तमत्व
विशेषणं । यथोक्तं । ‘पिंडब्रह्मांडनेतृत्वान्नरोजीवेश्वरावुभौ ॥ तयोश्चनयनाच्छुद्धंब्रह्मापिनरउच्यते ॥ नरजानामपांकार्यंनारंब्रह्मांडमिष्यते ॥ तद्यस्यवसतिस्थानंतेननारायणोविभुः ॥ स्वा
विद्यासृष्टपिंडेनतादात्म्यंयोगतोनरः ॥ सजीवःसपरंब्रह्मनरोत्तमपदाभिधम् ॥ तद्द्योतिकांगिरंनत्वाततोव्यासस्तयैवसन् ॥ संसारजयिनंग्रंथंजयनामानमीरयेत्’इति । एवंचजीवाविद्याकल्पितत्वाज्जग
तोमिथ्यात्वंब्रह्मणश्चतत्रसत्तास्फूर्तिप्रदत्वेनसत्यत्वंजीवस्यतद्भिन्नत्वंचेतिविषयोदर्शितः । अविद्यानिवृत्तौतत्कृतस्यप्रपंचस्यत्रैकालिकबाधादात्यंतिक्यनर्थनिवृत्तिःप्रयोजनं । अर्थात्तत्कामोऽधि
कारी । ग्रंथस्योक्तविषयस्यचज्ञाप्यज्ञापकभावःसंबंधइतिचदर्शितं । देवींनरनारायणनरोत्तमतत्त्वप्रद्योतनीं सरस्वतींचनमस्कृत्यैवततोव्यासस्तयैवसरस्वत्यापरमकारुणिकयाजनबोधायाविष्टो
जयंजयोनामेतिहासोयमितिवक्ष्यमाणत्वाज्जयसंज्ञंभारताख्यमितिहासंवा । ‘अष्टादशपुराणानिरामस्यचरितंतथा ॥ कार्ष्णंवेदंपंचमंचयन्महाभारतंविदुः ॥ तथैवविष्णुधर्माश्चशिवधर्माश्चशाश्व
ताः ॥ जयेतिनामतेषांचप्रवदंतिमनीषिणः’ ॥ इतिभाविष्यवचनात्पुराणादिकंवा । ‘चतुर्णांपुरुषार्थानामपिहेतौजयोस्त्रियां’ इतिकोशादन्यंवासर्वपुरुषार्थप्रतिपादकंग्रंथंशारीरकसूत्रभाष्यादिरूपमुदीरयेदु-

चारयेत् । अत्रलिङ्गमंगलाचरणस्यग्रंथपाठेप्यावश्यकत्वंदर्शयतारचनारंभेसुतरांतद्दर्शितं । नन्वेतन्नपठनोयंनव्याख्येयंचपौरुषेयत्वात्पुरुषेषुचभ्रमविप्रलंभकत्वयोःसंभवादितिचेन्न । सर्वज्ञेषुवेदैकप्रमाणेषुमन्वादिषुतदसंभवात् । पूर्वतंत्रेचस्मृत्यादिधर्मप्रामाण्यस्यसिद्धत्वात् । यस्यांतुस्मृतौलोभमूलकत्वंप्रत्यक्षंदृश्यतेयथावैसर्जनहोमोयंवासोऽध्वर्युःपरिगृह्णातिइतितत्रास्त्वप्रामाण्यं । नत्वष्टकाःकर्तव्याः प्रपाःकर्तव्या ऊर्ध्वपुंड्रंमृदाकुर्यादित्यादीनां तासांलोभमूलकत्वादर्शनात् । यांजनाःप्रतिनंदंति 'धन्वन्निवप्रपाअसि त्वमग्ने श्रोणामेकउदकंगामवाजति' इतिमंत्रलिंगानुमितविधिमूलकत्वाच्च । धन्वन्धन्वनिनिरुदकप्रदेशे । किमुश्रेष्ठःषळूनाआर्भवंत्रिष्टुबन्तमित्यनुक्रमणिकायां किमुश्रेष्ठइतिसूक्तस्यचतुर्दशर्चस्यऋभुदेवत्यस्यनवमदशम्यावेतेऋचौ 'आपोभूयिष्ठाइत्येकोअब्रवी॒दग्निर्भूयिष्ठइत्यन्योअब्रवीत् । वधर्यंतींबहुभ्यःप्रैकोअब्रवीदृतावदंतश्चमसाँअपिंशत १ श्रोणामेकउदकंगामवाजातिमांसमेकःपिंशतिसूनयाभृतम् ॥ आनिम्रुचःशकृदेकोअपाभरत्किंस्वित्पुत्रेभ्यःपितरावुपावतुः' २ । अत्रऋभ्वाख्यदेवतास्तुतिव्याजेनश्रेयःसाधनानिविधीयंते । हेऋभवःभवतांमध्येएकःकश्चित्तीर्थाश्रयेणैवप्राप्तदेवताभावआपएवभूयिष्ठाउत्कृष्टतमाइत्यब्रवीदेवंयज्ञादिनाप्राप्तदेवताभावोऽन्योऽग्निर्भूयिष्ठइत्यब्रवीत् । वधर्यंतीं अवपूर्वाद्धृञोविच्प्रत्ययेभागुरिमितेनाकारलोपेचेदंरूपं । स्वरादिपाठादव्ययत्वंनिपातत्वादाद्युदात्तत्वंच । वधरित्यव्ययंपालनार्थे अवगत्यधारयतीतियोगात् । तदर्थंयंतींगच्छंतींचेतोवृत्तिंदयांबहुभ्यःप्रमाणेभ्योनिश्चित्यैकोदययैवप्राप्तदेवताभावःप्रकर्षेणाब्रवीत् । तेयूयंऋताऋतानिसत्यान्येवैतान्यबादीनिदेवताभावप्राप्तिसाधनानिवदंतउपदिशंतोयज्ञेषुचमसान्सोमयुक्तान्अपिंशतव्यभजंत । अत्रह्येवमुपाख्यायते । ऋभवोनामत्रयोदेवाएकंचमसमासेदुस्तत्रवह्निरपितद्रूपंगृहीत्वाआगतस्तेतमतिसारूप्यात्पृथग्ज्ञातुमशक्ताएकंचमसंचतुर्धाव्यभजंतेति । यद्वा सत्यवादिनामेवतीर्थादिफलदमितिऋतावदंतइत्यस्यार्थः । श्रोणामेकः हेऋभवःभवतांमध्येएकःश्रोणांश्लक्ष्णांगांमृदंगोपोचंदनादिरूपांतीर्थनिकटस्थांमुख्यकर्मभूतांप्रत्युदकंजलंगौणंकर्मअवाजत्यवगमयति अंतर्भावितण्यर्थोयं श्रोणांगामुदकेनमिश्रयतीत्यर्थः । श्रोणांगांरक्तचंदनादिरूपांवा । तथाएकःसूनयाहिंसयातत्कर्त्राआभृतमाहृतंमांसंगोरोचनाख्यंपिंशतिपिनष्टिउदकेनसहेतिशेषः । निम्रुचःनितरामस्तंगच्छतोदग्धेंधनस्याग्नेःसंबंधिशकृत्गोमयं शुष्कगोमयोत्थंभस्मेतियावत् अपाभरदपाहृतवान् । अत्राप्युदकेनसहेतिशेषः । व्यवहिताश्चेतिछंदसिव्यवहितेनाप्युपसर्गेणक्रियायाःसंबंधः । हृग्रहोर्भश्छंदसीतिहस्यभः । एतानिमंत्रपदान्यसंपूर्णार्थत्वात्स्वार्थलाभायब्राह्मणमपेक्षंते । इषेत्वोर्जेत्वेत्यादिमंत्रवत् । तत्रयथा । इषेत्वेतिशाखामाच्छिनत्तिउर्जेत्वेत्यनुमार्ष्टीतिब्राह्मणानुसारात् हेशाखेत्वात्वामिषेअन्नायाच्छिनद्मीतिऊर्जेपशुभ्यःअनुमार्ज्मीतिव्याख्यातं । एवमिहापिवासुदेवोपनिषद्ब्राह्मणतंत्रपुराणोपबृंहणानुसारादूर्ध्वपुंड्रार्थंश्लक्ष्णांमृदंजलेनमिश्रयेदितिव्याख्येयं । तथाकालाग्निरुद्रबृहज्जाबालाद्युपनिषद्ब्राह्मणतंत्रपुराणोपबृंहणानुसारात्त्रिपुंड्रंकर्तुंनिम्रुचःशकृदपाभरदितिचव्याख्येयं । एवमितरस्यापिपादस्यब्राह्मणमंत्रलिंगाद्युपबृंहणस्मृतिभ्यश्चाष्टकाप्रपाविधिवदनुमेयं । तथाचश्रोणामितिपदस्यरक्तामितिव्याख्यानेसौरशाक्तगाणेशानांरक्तमेवपार्थिवंद्रव्यंपुंड्रार्थेतत्तत्तंत्रेविधीयते । वैष्णवानांपीतं शैवानांभस्मेति । अनेनतत्तत्पुंड्रविशेषोपलक्षिततत्तद्देवताभजनेनापिदेवताभावंप्राप्नुवंतीतिविधीयते केवलवैदिकानांतु श्रोणांश्लक्ष्णामितिव्याख्यानेनात्रितयस्यापिसमुच्चयः 'स्नात्वापुंड्रंमृदाकुर्याद्धुत्वाचैवतुभस्मना । देवान्विप्रान्समभ्यर्च्यचंदनेनसमाचरेत्'इतिस्मृतिभ्यः । अत्रगोरोचनाग्रहणंचंदनाद्यष्टगंधोपलक्षणार्थं । एतेषांविकल्पसमुच्चयपक्षाणांपितृपैतामहपरंपराक्रमेणव्यवस्थामाह । किंस्वित्पुत्रेभ्यःपितरावुपावतुरितिपुत्रहितार्थंयत्किंचिद्व्रतंपितरौमातापितरौपितृपितामहौवाउपेत्यस्वीकृत्यअवतुःव्रतंसम्यक्परिपालयामासतुः तद्देवतस्यपुत्रस्यश्रेयःसाधनमित्यर्थः । एवंसत्यवादिनांतीर्थानियज्ञादयस्तंत्रमार्गेणसूर्याद्यन्यतमोपास्तिःकेवलवैदिकताचेतिदेवताभावप्राप्तिसाधनानीतिमंत्रद्वयतात्पर्यंसिद्धं । तस्मादस्मदादिभिरल्पज्ञैर्दृष्टमूलमदृष्टमूलंवामनुव्यासादिसर्वज्ञप्रणीतंस्मृतिजातंवेदवद्वेदविदांवचनमितिन्यायेनागमयितव्यंपठनीयंव्याख्येयंचेतिसर्वमनवद्यम् १

॥ १ ॥
॥

महतःशास्त्रस्यारंभे बहुविघ्नसंभावनया स्वोपास्यंवासुदेवंद्वादशाक्षरेणप्रणम्य 'यस्यदेवेपराभक्तिर्यथादेवेतथागुरौ ॥ तस्यैतेकथिताह्यर्थाःप्रकाशंतेमहात्मनः' इत्युक्तेरीश्वरवत्परात्परगुरुंपितामहं परंच गु
रून्वसिष्ठमरीच्यादीन्प्रजापतींश्चप्रणम्याहंमनुरभवंसूर्यश्चेत्यादिनावामदेवइवस्वकीयंब्रह्मभावमयमात्माब्रह्मेतिशास्त्रमनुसंदधानःप्रत्यगात्मानमेवनमस्करोति ओंनमःकृष्णद्वैपायनायेति । त
तोविघ्नविनायकान्नमस्कृत्यसुखासीनानितिभारतारंभश्लोकेऽपेक्षितंपूरयतिगद्येन । लोमहर्षणपुत्रइति । 'लोमानिहर्षयांचक्रेश्रोतॄणांयःस्वभाषितैः । कर्मणाप्रथितस्तेनलोमहर्षणसंज्ञया' इतिकौर्मेनिरु
क्तार्थनाम्नःपुत्रउग्रश्रवाः उग्रस्यनृसिंहतापनीयोपनिषत्प्रतिपाद्यस्यवस्तुनःश्रवःश्रवणंयस्यसः अधिगतोपनिषद्रहस्यइत्यर्थः । सौतिः सूतजातेरुत्पत्तिरुक्तावायुपुराणे । 'वैन्यस्यतुपृथोर्यज्ञे
वर्तमानेमहात्मनः ॥ सुत्यायामभवत्सूतःप्रथमंवर्णवैकृतम् ॥ ऐन्द्रेणहविषातत्रहविःपृक्तंबृहस्पतेः ॥ जुहावेंद्रायदैवेनततःसूतोव्यजायत ॥ शिष्यहव्येनसंपृक्तमभिभूतंगुरोर्हविः ॥ अधरो
त्तरचारेणजज्ञेतद्वर्णवैकृतं' इति । वर्णवैकृतमितिब्राह्मण्यांक्षत्रियात्सूतइतियाज्ञवल्क्योक्तंविलोमजत्वं । तस्यसूतस्यापत्यंसौतिः पौराणिकःपुराणेकृतश्रमः । नैमिषारण्ये । वाराहे 'एवंकृत्वाततो
देवोमुनिंगौरमुखंतदा ॥ उवाचनिमिषेणेदंनिहतंदानवंबलम् ॥ अरण्येऽस्मिंस्ततस्त्वेतन्नैमिषारण्यसंज्ञितम्' इत्युक्तरूपे । नैमिशेतिपाठेतु वायवीये । 'एतन्मनोमयंचक्रंमयासृष्टंविसृज्यते ॥ यत्रा
स्यशीर्यतेनेमिःसदेशस्तपसःशुभः ॥ इत्युक्त्वासूर्यसंकाशंचक्रंसृष्ट्वामनोमयम् ॥ प्रणिपत्यमहादेवंविससर्जपितामहः ॥ तेऽपिहृष्टतराविप्राःप्रणम्यजगतांप्रभुम् ॥ प्रययुस्तस्यचक्रस्ययत्रनेमिर्व्यशी

ओंनमोभगवतेवासुदेवाय ॥ ओंनमःपितामहाय ॥ ओंनमःप्रजापतिभ्यः ॥ ओंनमःकृष्णद्वैपायनाय ॥ ओंनमःसर्वविघ्नविनायकेभ्यः ॥ लोमहर्षणपुत्रउग्रश्र
वाःसौतिःपौराणिकोनैमिषारण्येशौनकस्यकुलपतेर्द्वादशवार्षिकेसत्रे १ सुखासीनानभ्यगच्छद्ब्रह्मर्षीन्संशितव्रतान् ॥ विनयावनतोभूत्वाकदाचित्सूतनंदनः २
तमाश्रममनुप्राप्तंनैमिषारण्यवासिनाम् ॥ चित्राःश्रोतुंकथास्तत्रपरिवव्रुस्तपस्विनः ३ अभिवाद्यमुनींस्तांस्तुसर्वानेवकृतांजलिः ॥ अपृच्छत्सतपोवृद्धिंसद्भिश्चैवाभि
पूजितः ४ अथतेषूपविष्टेषुसर्वेष्वेवतपस्विषु ॥ निर्दिष्टमासनंभेजेविनयाल्लोमहर्षणिः ५ सुखासीनंततस्तंतुविश्रांतमुपलक्ष्यच ॥ अथापृच्छदृषिस्तत्रकश्चित्प्रस्तावयन्क
थाः ६ कुतआगम्यतेसौतेक्वचायंविहृतस्त्वया ॥ कालःकमलपत्राक्षशंसैतत्पृच्छतोमम ७ एवंपृष्टोऽब्रवीत्सम्यग्यथावल्लोमहर्षणिः ॥ वाक्यंवचनसंपन्नस्तेषांचचरिताश्रयम् ८

र्यत ॥ तद्वनंतेनविख्यातंनैमिशंमुनिपूजितम्' इतितन्निर्वचनंद्रष्टव्यं । शौनकस्य शौनःसर्वविवेकदृगितिलीलावत्यां शौनएवशौनकस्तस्य । कुलपतेः 'एकोदशसहस्राणियोन्नदानादिनाभरेत् ॥
सवैकुलपतिः' इत्युक्तलक्षणस्य । सत्रे येयजमानास्तएवऋत्विजोयस्मिन्बहुकर्तृकेक्रतौससत्रसंज्ञः । यथोक्तं । 'बहुभ्योदीयतेयत्रतृप्यंतिप्राणिनोबहु ॥ कर्तारोबहवोयत्रतत्सत्रमभिधीयते' इति १ सु
खासीनानिति । कर्मच्छिद्रेषु सुखंस्वरूपानंदंविचारयितुमासीनान् अभ्यगच्छत्आभिमुख्येनस्वयमेवतेषांपुरःकथांवक्तुंकौतूहलितयागतवान् । 'नानाहूतोऽध्वरंगच्छेदन्यत्रतुकुतूहलात्' इत्युक्तेः । सं
शितव्रतान्सम्यक्शितंतीक्ष्णंखड्गधारावद्नास्कन्दनीयंव्रतंब्रह्मचर्यादिकंयेषांतान् २ नैमिषारण्यवासिनामाश्रममनुप्राप्तंतंतपस्विनःपरिवव्रुरितिसंबंधः । अनुप्राप्तइतिपाठेतूत्तरार्धंतमित्यध्याहार्यम् ३
तपोधनानांतपोवृद्धिरेवप्रष्टव्याऽतस्तांस्तपोवृद्धिमपृच्छत् पृच्छेर्द्विकर्मकत्वात् । तपोवृद्धानितिपाठेतपोऽपृच्छदित्यन्वयः ४ निर्दिष्टमिहोपविश्यतामितिदर्शितम् ५ प्रस्तावयन्नुपोद्घातयन् ।
प्राप्तवयाइतिपाठेवृद्धइत्यर्थः ६ उपोद्घातमेवाह कुतइति । विहृतोनीतः ७ एवमिति । सम्यक्शब्दतःशुद्धं । यथावदर्थतःशुद्धं । वचनसंपन्नःशब्दप्रयोगकौशलयुक्तः । तेषांचरिताश्रयं
तेषांमुनीनांचादन्येषांराजादीनांचसंबंधीनियानिचरितानितेषामाश्रयभूतंवचनम् ८

